## ॥ अथ वेङ्कटेशस्तोत्रम् ॥

कमलाकुचचूचुककुङ्कुमतो
नियतारुणितातुलनीलतनो ।
कमलायतलोचन लोकपते
विजयी भव वेङ्कटशैलपते ॥ १॥

सचतुर्मुखषण्मुखपञ्चमुख-
प्रमुखाखिलदैवतमौलिमणे ।
शरणागतवत्सल सारनिधे
परिपालय मां वृषशैलपते ॥ २॥

अतिवेलतया तव दुर्विषहैः
अनुवेलकृतैरपराधशतैः ।
भरितं त्वरितं वृषशैलपते
परया कृपया परिपाहि हरे ॥ ३॥

अधिवेङ्कटशैलमुदारमते
जनताभिमताधिकदानरतात् ।
परदेवतया गदितान्निगमैः
कमलादयितान्न परं कलये ॥ ४॥

कलवेणुरवावशगोपवधू
शतकोटिवृतात्स्मरकोटिसमात् ।
प्रतिवल्लविकाभिमतात्सुखदात्
वसुदेवसुतान्न परं कलये ॥ ५॥

अभिरामगुणाकर दाशरथे
जगदेकधनुर्धर धीरमते ।
रघुनायक राम रमेश विभो
वरदो भव देव दयाजलधे ॥ ६॥

अवनीतनयाकमनीयकरं
रजनीकरचारुमुखाम्बुरुहम् ।
रजनीचरराजतमोमिहिरं
महनीयमहं रघुराममये ॥ ७॥

सुमुखं सुहृदं सुलभं सुखदं
स्वनुजं च सुकायममोघशरम् ।
अपहाय रघूद्वहमन्यमहं
न कथञ्चन कञ्चन जातु भजे ॥ ८॥

विना वेङ्कटेशं नाथो न नाथः
सदा वेङ्कटेशं स्मरामि स्मरामि ।
हरे वेङ्कटेश प्रसीद प्रसीद
प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ ॥ ९॥

अहं दूरतस्ते पदाम्भोजयुग्म-
प्रणामेच्छयाऽऽगत्य सेवां करोमि ।
सकृत्सेवया नित्यसेवाफलं त्वं
प्रयच्छ प्रयच्छ प्रभो वेङ्कटेश ॥ १०॥

अज्ञानिना मया दोषान्
अशेषान्विहितान् हरे ।
क्षमस्व त्वं क्षमस्व त्वं
शेषशैलशिखामणे ॥ ११॥

॥ इति वेङ्कटेशस्तोत्रम् ॥